आर्यभिषक् ' पुस्तकावलिः । संख्यांकः २३.

श्रीशंकरः ।

# श्रीनिघंटशिरोमणिः ।

प्रथमः पार्श्वः ( भागः )

पदे-कुलावतंस-दाजीज्योतिषी-सूनुना शंकर-
शास्त्रिणा चिकित्सकेन संपादितः
मुद्रितश्च ।



मुम्बापुर्यां
' गोवर्धनमुद्रालये ' मुद्रापितम् ।
शके १८२० —सन १८९८.

मूल्यं ( ।॥- ) पादोनरूपकः ।

स्थानम् :-मुंबई, नवा नागपाडा, आर्यभिषक्कार्यालयम् ।




भो श्रीमन् कुरुन्दवाडसंस्थानश्रेण्यंशांशुमान्,

विद्या-विनय-सच्छीलता-निपुणतम, विद्व-

त्साहार्द-सहृदय-हृदय, विद्याविभूषण-

भूषणैकतत्पर, श्रीमद्गणेशगुणगणगण-

न-मनन-निलीन, मत्पूज्य-सुहृद्रत्न,

राजमान्यराजश्रिया विराजित-पटवर्धनकुलभूषण

हरिहरात्मज ( खलु अपूर्वप्रतिम ! )

गणपतराव ( अपरनाम्ना )

बापूसाहेब,

मया किंचिन्मात्रेण संपादितमिदं

पुस्तकं, भवत्सकाशे प्रेमादरविनयपुरःसरमह-

मर्पयामि ।

श्रीशंकर

# श्रीनिघंटाशिरोमणिः ।



## मंगलाचरणम् ।

श्रीगणेश्वराय नमः । वंदे महागणपतिं प्रथमिर्धिसिद्धये । लंबोदरं चतुर्बाहुं शुंडादंडविराजितम् ॥ १ ॥ आदौ निघंटानालोक्य नामभिः पत्रकं कृतम् । सिद्धेश्वराख्यवैद्येन बेलापुरनिवासिना ॥ २ ॥ तदाज्ञया राघवसुत निघंटानां शिरोमणिम् । अकरोद्भिषजां प्रीत्यै लोकोपकृतिहेतवे ॥ ३ ॥

१ गुडूची म गुळवेल । ( नामानि. ) गुडूच्यमृतवल्ली च ज्वरारिरमृता तथा । श्यामांबरा सुरकृता तथैव मधुपर्णिका ॥ १ ॥ छिन्नोद्भवा मृतलता छिन्ना चैव रसायनी । तथैव सोमलतिका तद्वदमृतसंभवा ॥ २ ॥ वत्सादनी छिन्नरुहा विशल्या तु भिषक्प्रिया । कुंडलिनी वयस्था च तथा चैव जिवंतिका ॥ ३ ॥ चंडहासा छद्मिका च तथा नागकुमारिका । एते 'राजनिघंटे' तु सम्यक् प्रोक्ता भिषग्वरैः ॥ ४ ॥ धारा तु कुंडली चैव छिन्नांगा चक्रलक्षणा । तंत्रिका ज्वरनाशी च मंडली देवनिर्मिता ॥ ५ ॥ सौम्या विश्या वत्सछिन्ना प्रोक्ता 'धन्वंतरे' तथा । 'कैयदेवे' भिषक्श्रेष्ठैः 'सोमा' चैका प्रकीर्तिता ॥ ६ ॥ 'द्रव्यरत्नाकरे' चैव छिन्या चैका स्मृता बुधैः । चक्रिका तंत्रिका चैव प्रोक्ता 'भावप्रकाशके' ॥ ७ ॥ तिक्तामृता भिषक्श्रेष्ठैः प्रोक्ता 'गणनिघंटके' । चत्वारिंशत्संख्यकाश्च संप्रोक्ता भिषजां वरैः ॥ ८ ॥ गुणाः । गुडूची कोष्णवीर्या च कषाया तिक्तका स्मृता । कृष्णज्वरवमीनां च नाशिनी भ्रमहारिणी ॥ ९ ॥ पांडुप्रमेहवातास्रकदाहहंत्री रसायनी । संप्रोक्ता भिषजां श्रेष्ठैः 'राजनामनिघंटके' ॥ १० ॥ रक्तार्शकुष्ठजंतूनां त्रिदोषाणां विनाशिनी । ग्राही मेध्यायु प्रदेति कफवातापहारिणी ॥ ११ ॥ कंडूप्रमेहघ्ना पित्तघ्नी बला 'धन्वंतरे' स्मृता । पाके मधुरसा हृद्या वन्हिकृत् कासनाशिनी ॥ १२ ॥ कामलामज्वरघ्नीति 'कैयदेवे' स्मृता बुधैः । दोषज्वरहरा चैव दीपनी

तिक्तमुष्णं रसश्चैव कटुप्रोक्तं सदैव हि । वल्लीमक्कफपित्तघ्नं कट्कुष्ठविनाशनम् ॥ ३५ ॥ असृग्ज्वरघ्नं दाहघ्नं प्रोक्तं राजनिघंटके । पत्रं तस्य भिषक्श्रेष्ठैः पित्तघ्नं कफनाशनम् ॥ ३८ ॥ रक्तदोषहरं चैव संप्रोक्तं नैव संशयः । फलं त्रिदोषशमनं वल्ली चैव कफापहा ॥ ३६ ॥ मूलं विरेचनं प्रोक्तं 'धन्वन्तरिनिघंटके' । वल्ली शीतकरी प्रोक्ता श्लेष्मघ्न वीजतैलकम् ॥ ३७ ॥ वाताशीतिहरं चैव 'द्रव्यरत्ने' प्रकीर्तितम् । फलं त्रिदोषशमनं प्रोक्तं मदनिघंटके ॥ ३८ ॥ ५ काकोली । काकोली मधुरा काकी वायसा वायसूलिका । क्षीरा तु ध्वांक्षिका वीरा शुक्ला धीरा तु मेदुरा ॥ ३९ ॥ ध्वांक्षोली स्वादुमांसा च वयस्था जीवनी तथा । एते 'राजनिघंटे' तु सम्यक् प्रोक्ता भिषग्वरैः ॥ ४० ॥ कोकिला कविभिः प्रोक्ता 'धन्वन्तरिनिघंटके' । काकोण्णी वायली काणा शुक्लाक्षीण तथैव च ॥ ४१ ॥ ततस्तु क्षीरशुक्लीका वायस्था च तपस्विनी । 'कैयदेवे' भिषक्श्रेष्ठैरेते प्रोक्ता न संशयः ॥ ४२ ॥ वायसोली भिषक्श्रेष्ठैः प्रोक्ता 'मदनपालके' । चतुर्विंशतिसंख्या च संप्रोक्ता भिषजां वरैः ॥ ४३ ॥ गुणाः । शीतमधुरसा चैव क्षयपित्तानिलापहा । रक्तदाहहरा चैव ज्वरदाहविनाशिनी ॥ ४४ ॥ कफनिर्हरिणी प्रोक्ता तथा शुक्रविवर्धनी । प्रोक्ता 'राजनिघंटे' स्मिन् भिषक्श्रेष्ठैर्न संशयः ॥ ४५ ॥ वृष्या गुरु बृंहणा च वातपित्तहरा तथा । शोषघ्नी 'कैयदेवे' च संप्रोक्ता भिषजां वरैः ॥४६॥ रक्तपित्तहरा चैव हृद्रोगशमनी तथा । प्रोक्ता 'द्रव्यनिघंटे' च भिषक्शास्त्रविशारदैः ॥ ४७ ॥ वाततृष्णाहरा चैव प्रोक्ता 'मदनपालके' । वातदाहास्रपित्तघ्नी शोषहा 'भावनामके' ॥ ४८ ॥ ६ क्षीरकाकोली । ततस्तु क्षीरकाकोली क्षीरशुक्ला पयस्विनी । पयस्या क्षीरमधुरा वीरा क्षीरविषाणिका ॥ ४९ ॥ जीववल्ली जीवशुक्ला 'राजनाम्नि' निघंटके । क्षीरिणी तु सुकोली च वयस्था च क्षुरा तथा ॥ ५० ॥ विषाणिका 'कैयदेवे' कविभिः परिकीर्तिता । सुराह्वया सिराह्वा च 'द्रव्यरत्नाकरे' स्मृता ॥ ५१ ॥ तथा 'मदनपाले' च सुराह्वा परिकीर्तिता । धारा तु क्षीरवल्लीका शुक्ला 'भावप्रकाशके' ॥ ५२ ॥ गुणाः । हृद्रोगशमनी प्रोक्ता 'द्रव्यनामनिघंटके' । ७ आपमर्द्रा न सावग़ा । मुद्रपर्णी क्षुद्रसहा शिम्बी मार्जारगंधिका ॥ ५३ ॥ वनजा रिंगणी ह्रस्वा-

॥ ५४ ॥ शूर्पणी च सुगन्धिका । पांशुला माषमुद्गा च वनमुद्गा वनाढ्या ॥ ५४ ॥ अरण्यमुद्गा वन्या च प्रोक्ता ' राजनिघण्टके ' । शिम्बीद्भवा हस्वा च तथैव वनजारिणी ॥ ५५ ॥ ' धन्वंतरिनिघंटे 'च प्रोक्तेयं कविसत्तमैः मृगगन्धा शिंबिपर्णी वनजा सिंहिरिंगिणी ॥ ५६ ॥ सहा तु ' कैयदेवे 'च सिंहिसिंही प्रकीर्तिता । कुरङ्गिणी सुवर्णा च सिंही शृंगी तथैव च ॥ ५७ ॥ प्रोक्ता ' मदनपाले 'च भिषक्शास्त्रविशारदैः । अल्पिका वन्यपर्णी च प्रोक्ता ' भावप्रकाशके ' ॥ ५८ ॥ पञ्चविंशतिसंख्याका सम्प्रोक्ता भिषजां वरैः । गुणाः । मुद्गपर्णी हिमा प्रोक्ता कामज्वरविनाशिनी ॥ ५९ ॥ स्वादु रुचिकरी कफहरा वातरक्तापहा चैव प्रोक्ता ' राजनिघण्टके ' । स्वादु हिमा लघ्वी कफहरा ग्रहणीदाहहारिणी । प्रोक्ता ' धन्वंतरौ ' ध्रुवम् ॥ ६० ॥ लघु शोफनयनघ्नी च ग्रहणीदाहहारिणी । अर्शोऽतिसारहंत्रीति सम्प्रोक्ता ' कैयदेवके ' ॥ ६१ ॥ जन्तुज्वरहरा चैव ' द्रव्यरत्नाकरे ' स्मृता । रूक्षा ' भावप्रकाशे ' च सम्प्रोक्ता भिषजां वरैः ॥ ६२ ॥ कफपित्तहरा चैव तथैव रक्त ( ? ) स्तम्भिनी ॥ प्रोक्ता ' गणनिघंटे 'च भिषक्शास्त्रविशारदैः ॥ ६३ ॥ [1] जीवन्ती जीवनी जीव्या जीवती जीवदात्रिका । शाकश्रेष्ठा जीवभद्रा भद्रा मङ्गल्यनामिका ॥ ६४ ॥ एवा ' राजनिघण्टे 'तु सम्प्रोक्ता भिषजां वरैः ॥ ६५ ॥ क्षुद्रजीवा यशस्या च । यशस्करी भागधेया तथैव जीववर्द्धिनी ॥ ६५ ॥ क्षुद्रजीवा यशस्या च शृगाटी जीवपुष्पिका । कांजिका शशिवाजा चापगाला जीवनीयका ॥ ६६ ॥ ' धन्वंतरिनिघंटे 'च प्रोक्तेषा भिषजां वरैः । मधुस्रवा जीवपुष्पा तु-च्छा मधुस्रवा ॥ ६७ ॥ नामधेया पुत्रभद्रा जीवदेवा सुखंकरी । शृं-गराटी ' कैयदेवे ' सम्प्रोक्ता कविसत्तमैः ॥ ६८ ॥ ' द्रव्यरत्नाकरे 'चैव जीवना परिकीर्तिता । तत पयस्विनी चैव प्रोक्ता भावप्रकाशके ॥ ६९ ॥ तथा ' गणनिघंटे 'च सम्प्रोक्ता शिविरांटिका । द्वात्रिंशत्संख्यया प्रोक्ता जीवन्ती परिकीर्तिता ॥ ७० ॥ गुणाः । जीवन्ती मधुरा शीता रक्तपित्त-हरा तथा । रक्तवातक्षयहरा दाहज्वरविनाशिनी ॥ ७१ ॥ कफदा वीर्यदा चैव प्रोक्ता ' राजनिघण्टके ' । चक्षुष्या दोषनुत् प्रोक्ता ' धन्वंतरिनिघंटके ' ॥ ७२ ॥ स्निग्धा ग्राही त्रिलघुला यस्या ' कैय ' स्मृता बुधैः ॥

[1] बहुपर्णी । म धारहरणतरी । बहुपूर्वा पुत्रभद्रा मधुरा च प्रियकरी

॥ ७३ ॥ बृहती जीवपुष्पा च तथैव च यशस्करी । प्रोक्ता 'राजनिघंटे' तु सतसंख्या न संशय- ॥ ७४ ॥ भूतविद्रावणी ज्ञेया येमाट्रसनियामका । गुणाः । बृहज्जीवंतिका चैव मधुवीर्या रसायनी ॥ ७५ ॥ भूतद्राविति सम्प्रोक्ता 'राजनामनिघंटके' । १०. हेमजीवंती । म. पिवळा डगवेल । ततस्तु हेमजीवनी तृणमयी हिमाश्रया । स्वर्णपर्णी सुजीवंती स्वर्णजीवा सुपर्णिका ॥ ७६ ॥ हेमपुष्पी स्वर्णलता जीर्णजीवंतिका तथा । हेमवल्ली हेमलता प्रोक्ता 'राजनिघंटके' ॥ ७७ ॥ सैवा द्वादशसंख्याका सम्प्रोक्ता भिषजां वरैः । स्वर्णजीवंतिका वृष्या चक्षुष्या मधुरा च सा ॥७८॥ शिशिरा वातपित्तासृग्दाहजिद्बलवर्धिनी । गुणाः । स्वर्णजीवंतिका 'वृष्या' चक्षुष्या ' मधुरा तथा ॥ ७९ ॥ शिशिरा वातपित्तासृग्दाहघ्नी बलवर्धिनी । प्रोक्ता 'राजनिघंटे' च भिषग्विद्याविशारदैः ॥ ८० ॥ ११. लिंगिनी । म. शिवलिंगी । हिं शिवलिंगी बहुपुत्री च ईश्वरी शिववल्लिका । स्वयंभूलिंगसंभूता लिंगी चित्रफला ततः ॥ ८१ ॥ चंडली लिंगजा देवी चंडा या स्तंभिनी तथा । शिवजा शिववल्लीति प्रोक्ता 'राजनिघंटके' ॥ ८२ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता लिंगसंभवा । पंचमी संख्यका प्रोक्ता पुरातनचिकित्सकैः ॥ ८३ ॥ लिंगिनी कटुरुष्णा च दुर्गंधा च रसायनी । सर्वसिद्धिकरा दिव्या यदया रसनियामिनी ॥ ८४ ॥ गुणाः । लिंगिनी कटुरुष्णा च दुर्गंधा च रसायनी । सर्वसिद्धिकरी दिव्या 'नृपे' रसनियामिनी ॥ ८५ ॥ पित्तजा तु क्षयकरी कफकुष्ठविनाशिनी । 'द्रव्यरत्नाकरे' प्रोक्ता भिषग्विद्योपजीविभिः ॥ ८६ ॥ ११ कोशातकी । म. कडूदोडकी । कोशातकी कृतच्छिद्रा जालिनी कृतवेधना । क्ष्वेडा सुतिक्ता घंटाली मृदंगफलिनी तथा ॥ ८७ ॥ प्रोक्ता 'राजनिघंटे' च भिषक्शास्त्रविशारदैः । श्वेतघाषा कोशवती कर्कोटी च मृदंगिका ॥ ८८ ॥ ज्वला तु तिक्तधाराशी ज्योत्स्ना च कर्कटेचउदा । छली च घोषका चैव 'कैयदेवे' प्रकीर्तिता ॥ ८९ ॥ 'द्रव्यरत्नाकरे' चैव वेदिभा परिकीर्तिता । र क्षा ॥ धोलला चैव तथैव कर्कशाच्छदा ॥ ९० ॥ 'अमरे' चैव कविभिः प्रोक्ता धारागंधा ध्रुवम् । अयोविंशतिसंख्याका सम्प्रोक्ता कटुतलिंगी ॥ ९१ ॥ गुणाः । कटुकोशातकी चैव हि शिशिरा कटुका तथा । कषायकटुविख्याता पित्तवातकफापहा ॥ ९२ ॥ मता-

मानविशोधी च प्रोक्ता 'राजनिघण्टके' । पथ्यादाय विशोधी च तिक्ता मारायशोधिनी ॥ ९३ ॥ रक्षा लघ्वी च विख्याता पाके तु कटुका स्मृता । गरोद्गरं जयेत् कासं पाण्डुशोफविनाशिनं । ९४ ॥ कफप्लीहागुल्मघ्नी कामलानुत्तनाशिनी । फलं पाके हिमं प्रोक्तं 'धैयदेवनिघण्टके ॥ ९५ ॥ फलं तु भेदनं प्रोक्तं शीतलं स्यात्तथा लघु । त्रिदोषमेहनुत् प्रोक्तं धैर्ये 'मदनपालके' । १२ स्वर्णगुलाः न स्वर्णगुहिरिः । स्वर्णगुमाय गुमा च कपिकच्छु महर्षिभि ॥ ९६ ॥ लांगुरी कुडरी चंडा मर्कटी दुरभिग्रहा । कपिरोमफलाऽगुमा कुस्पर्शा कच्छु राजया ॥ ९७ ॥ प्रावृष्ण्या भूकशिंबी बदरी बदरैभी । शिंबी वरहिता तीक्ष्णा रोमालुर्वनकृ-रिका ॥ ९८ ॥ किरारेमा रोमवल्ली चैषा 'राजनिघण्टके' । शीतपित्तप्रणामृत्नी प्रोक्ता 'राजनिघण्टके' ॥ ९९ ॥ वातघ्नी वर्धिभि प्रोक्ता 'धन्वन्तरिनिघण्टके । 'कैयदेवे' बृंहणीति मिषग्भि परिकीर्तिता ॥ १०० ॥ गुरु । बाजं तु वातशमनं वाजीकरणमेव च । प्रोक्तं 'मदनपाले' च भिषक्शास्त्रविशारदैः ॥ १०१ ॥ गुरु तिक्ता वातहरा बल्या कफविनाशिनी । प्रोक्ता 'भावप्रकाशे' च पुरातनचिकित्सकैः ॥ १०२॥ सीता हिमेति संप्रोक्ता गणनामनिघण्टके । १४ कटुतुम्बी । म कटुमापला । कटुतुंबी कटुफला तुबिनी कटुतुबिनी ॥ १०३ ॥ बृहत्फला राजपुत्रा तिक्तबीजाजतुम्बिका । प्रोक्ता 'राजनिघण्टे' च भिषक्शास्त्रविशारदै ॥ १०४ ॥ कटुकालाबुनी तुंबी लंबा पिंडफला तथा । इक्ष्वाकु क्षत्रियवरा तथैव च महाफला ॥ १०५ ॥ धन्वन्तरौ स्मृता नूनं भिषक्शास्त्रपरायणैः । ततोऽत्र विद्धफला चैव राजन्या प्रवरा वरा॥१०६॥ तिक्तालाबू दुग्धनिका तुम्बिका तदनन्तरम् 'कयदेव' प्रयुक्ताश्च सर्वं द्वाविंशति स्मृता ॥ १०७ ॥ कटुतुंबा भवतीक्ष्णा वातहृत् श्वासनाशिनी । कटु स्यात्कफवातघ्नी शोधना व्रणशूलहृत् ॥ १०८ ॥ शोफघ्नी विषनाशा च प्रोक्ता 'राजनिघण्टके' । रसे पाके हिमा लघ्वी प्रोक्ता 'गणनिघण्टके' ॥ १०९ ॥ पाके कट्वी वातपित्तश्वासज्वरविनाशिनी । महया शीतला प्रोक्ता 'ऐयदेवनिघण्टके ॥ ११० ॥ वातपित्तज्वरान् हन्ति हृद्या भावप्रकाशके । १५ अमरवल्ली म अमरवल्ल । खपरल्याकाशवल्ली च तुस्पर्शा व्योमवल्लिका ॥ १११ ॥ प्राक्ता 'राज

निघंटे' तु ततस्त्वमरवल्लरी । 'भावप्रकाशे' विदिता पचसंख्या भिषग्वरैः ॥११२॥ गुणा. । आकाशवल्ली कटुका मधुरा पित्तनाशिनी । वृष्या रसायनी वल्या दिव्यौषधि 'नृपे' स्मृता ॥ ११३ ॥ ब्राह्मी तिक्ता पिच्छिला च तुवरा नेत्ररोगहृत् । 'भावप्रकाशे' संप्रोक्ता पुरातनभिषग्वरैः ॥ ११४ ॥ छर्द्यामिकारि विख्याता पित्तश्लेष्महरा भवेत् । १६ देवदाली । जीमूतका फंटफला सहावेगी गरागरी ॥ ११५ ॥ तथा कोशफला घोर.. फट्वा कटुफला तथा । विषहा कर्कटी चैव देवदाली तदुत्तरम् ॥११६॥ ततस्तु सारमुद्रिका कोशपृष्ठा तथैव च । आखुविषहा देवाली च ततो रोमशपत्रिका ॥ ११७ ॥ तुरंगिका च कर्मारी देवतांगा च ताडका । 'द्रव्यरत्ने' स्याद्वेणी भिषग्भिः परिकीर्तिता ।११८। ननारके। देवतांड. आली 'मदनपालके' परागरी कोशसंख्या संप्रोक्ता भिषजां वरैः ॥११९॥ गुण । तिक्तोष्णा देवदाली स्यात्कटुः पांडुकफापहा। दुर्नामश्वासकासघ्नी कोमला भूतनाशिनी ॥ १२० ॥ 'राजनाम्नि' निघंटे च भिषग्भिः परिकीर्तिता । फलं कृमिघ्नं संप्रोक्तं श्लेष्मघ्नं गुल्मनाशनम् ॥ १२१ ॥ शूलघातहरं प्रोक्तं वैद्यैः 'भावप्रकाशके' । धान्विहाऽखुविषघ्नी च कफपांडुविनाशिनी । 'धन्वंतरिनिघंटे' च भिषग्भिः परिकीर्तिता । रसे तिक्ता तु पाके च तीक्ष्णा वातामहारिणी ॥ ॥ १२३ ॥ कफशोषविनाशा च कासज्वरविनाशिनी । हिध्माऽरुचिक्षयघ्नी च कृमिनुत्' कैयदेवके' ॥१२४॥१७वघ्याककोटकी।म. वांझकटोली । वंध्यादेवी नागहंत्री वंध्या कर्कोटका तथा । नागरातिमनोज्ञा च दिव्या' पथ्या सुकंदका ॥ ११५ ॥ पुत्रदात्री च श्रीकंदा कंदवल्लीश्वरी तथा । सुगंधा सर्पदमनी कुमारी विषकंटकी ॥ १२६ ॥ भूतहंत्री पग चैव प्रोक्ता 'राजनिघंटके' । नागारी नागदमनी प्रोक्ता 'धन्वंतरी तथा ॥१२७॥ विषमा दमनी चैव निष्फला नागघातिनी । ततस्तु मजादमनी 'कैयदेवे' प्रकीर्तिता ॥ १२८ ॥ तथा 'मदनपाले' तु प्रोक्ता योगेश्वरी बुधैः । षड्विंशति च संख्याका संप्रोक्ता भिषजां वरैः ॥ १२९ ॥ गुणाः । वंध्याकर्कोटकी तिक्ता कटूष्णा कफनाशिनी । स्थावरादिविषघ्नी च संप्रोक्ता 'राजनामके' ॥ १३० ॥ पाके कटुर-

घण्टके' ॥ १४८ ॥ इन्द्राव्हा ऐंद्रवारु च ऐंद्रा 'धन्वन्तरौ' स्मृता । ऐंद्रवा-
रु सुरेंद्रा च तथैव सुरवारुणी ॥ १४९ ॥ चित्रदेवी स्थाणुकर्णी धनु श्रे-
णी तथैव च । सूर्याव्हा चैव विख्याता तथैव मरुसंभवा ॥ १५० ॥
'द्रव्यरत्नाकरे' चैव चद्री त्वेका प्रकीर्तिता । तुवरीति भिषक्श्रेष्ठैः
प्रोक्ता 'गणनिघण्टके' ॥ १५१ ॥ युग्माब्धिसख्यका प्रोक्ता पुरातनचि-
कित्सकैः । गुणा । अथैंद्रवारुणी तिक्ता कटु शीता च रेचनी ॥ १५२ ॥
गुल्मपित्तोदरश्लेष्मकृमिकुष्ठज्वरापहा । 'राजनामनिघण्टे' तु सम्प्रोक्ता
भिषजां वरैः ॥ १५३ ॥ मेहारुचिक्रिमिकफपांडुरोगापहारिणी । मूढगर्भ-
हरा प्रोक्ता सर्वांगग्रंथिमोचनी ॥ १५४ ॥ विरगडामयहरा सम्प्रोक्ता
'कैयदेवके'। रसे पाके कटु लघु वीर्योष्णा कामलापहा ॥ १५५ ॥
कफपित्तश्लेष्महरा कठरोगापचीघ्निका । श्वासकासप्लीहहरा गरं व्रण-
हरा तथा ॥ १५६ ॥ मूढगर्भव्रणहरा प्रोक्ता 'धन्वतरौ' ध्रुवम् । २१
महत्फला । म० थोर इन्द्रावण । महत्फला चित्रवल्ली महेंद्री त्रपुसी तथा ॥ १५७ ॥
ततश्चित्रफला चैव त्रपुसा तदनन्तरम् । पुत्रसा (त्रपुसा?-पुत्रदा?)
चात्मरक्षा च विशाली दीर्घवल्लिका । बृहत्फला तु संम्या च महेंद्रव-
रुणी तथा ॥ १५८ ॥ बृहद्वारुणिका चैव प्रोक्ता 'राजनिघण्टके'। श्वेत-
पुष्पा मृगाक्षी च मृगेर्वारु मृगादनी ॥ १५९ ॥ हस्तिदन्ती नागदन्ती वारुणी
गजचिर्भिटी । 'धन्वतरौ' 'द्रव्यरत्ने' इयमेकी प्रकीर्तिता ॥ १६० ॥
एकविंशतिसंख्याका प्रयुक्ता भिषजां वरैः । गुणा । महेंद्रवारुणी ज्ञेया
पूर्वोक्तगुणभागिनी ॥ १६१ ॥ रसे वीर्ये विपाके च किंचिदेषा गुणाधि-
का । २२ शाखिनी । यवतिक्ता महातिक्ता हृदपादा विसर्पिणी ॥ १६२ ॥
नाकुली नेत्रमीना च शंखिनी पत्रतंडुली । अक्षपीडा सूक्ष्मपुष्पी यवति-
क्ता यशस्विनी ॥ १६३ ॥ माहेश्वरी तिक्तयवा तंडुली 'राजनामके'। इन्द्राक्षी
चव पिंडा तु नेत्रमाला यशस्करी ॥ १६४ ॥ 'धन्वतरौ' निगदिता पुरातनचि-
कित्सकैः । तिक्तला चैव विश्वा च बहुफेना तदुत्तरम् ॥ १६५ ॥ अक्षपीडा च
हुरसा प्रोक्ता 'गणनिघण्टके'। चोरपुष्पी कोशिनी च कोशो चैव प्रर्क । त
॥ १६६ ॥ षडधिंशतिसमाख्याता पुरातनभिषग्वरैः । गुणा । यवतिक्ता तु
तिक्ताम्ला दीपना रुचिकृत्तथा ॥ १६७ ॥ कृमिकुष्ठविषमघ्नी रचनी

च त्रिदोषनुत् । प्रोक्ता ' राजनिघंटे ' च वैद्यविद्याविशारदैः ॥ १६८ ॥ रसेपाके च मधुरा सुदरानाहनुद्गणे । २३. ईश्वरी, रुद्रजटा । रौद्री जटा रुद्रजटा रुद्रा सौम्या सुगंधिका ॥ १६९ ॥ सुवहा चेश्वरी चैव घना रुद्रलता तथा । सुगंधपत्रा सुरभी सुपत्रा च सुराह्वया ॥ १७० ॥ रुद्राणी पत्रवल्ली च जटावल्ली महाजटा । नेत्रपुष्करनामा च जटा द्वेति विंशति ॥ १७१ ॥ सम्प्रोक्ता भिषजां श्रेष्ठैः ' राजनाम्नि निघंटके ' । गुणा । रसे कटुरुद्रेश्वरी च श्वासकासहरा 'नृपे' ॥ १७२ ॥ हृद्रोगभूत-विद्रावी राक्षसानां निबर्हणी । २४. ज्योतिष्मती । म० मालकांगोणी । ज्योतिष्मती स्वर्णलता विख्याता स्तुलप्रभा ॥ १७३ ॥ ज्योतिर्लता तु कटभी पिंगला तदनंतरम् । क्षमा मेध्या च मतिदा दुर्जरा च सर-स्वती ॥ १७४ ॥ अमृता चैव संप्रोक्ता ' राजनाम्नि ' निघंटके । सुवर्ण-लतिका चैव ज्योति काया भिभ्रासवी ॥ १७५ ॥ लवणोक्ता दुर्मरेति ' धन्वंतरिनिघंटके ' । कगुनिका तु कद्दीका सुदनी च वृषा तथा ॥ १७६ ॥ ' कैयदेवे ' तु संप्रोक्ता ततो वह्निरुचिस्तथा । ' द्रव्यरत्नाकरे ' चैव भिषग्भिः परिकीर्तिता ॥ १७७ ॥ पारावतपदी चैव ज्योतिष्का तु सुदु-र्दनी । प्रोक्ता ' भावप्रकाशे ' च पंचविंशतिसंख्यका ॥ १७८ ॥ गुणा । ज्योतिष्मती रसे तिक्ता किंचित्कटु स्मृता जनै । दाहप्रदा वातक-फान् हति प्रज्ञाप्रदायिनी ॥ १७९ ॥ मेधाग्निदीपनी प्रोक्ता ' राजनाम-निघंटके ' । कषायामोहदा स्निग्धा वर्णदा व्रणपाण्डुहा ॥ १८० ॥ त्रिसर्प-घ्नी ' कैयदेवे ' प्रोक्ता वैद्यैर्न संशय । श्लेष्मवातहरा चैव पाचनी क-टुका सरा ॥ १८१ ॥ अत्युष्णा वामनी तीक्ष्णा वह्निदा ' धन्वनामके ' । आमवातहरा प्रोक्ता ' मदने ' भिषजां वरैः ॥ १८२ ॥ सुदरोगहरा चैव ' भावे ' प्रोक्ता मनीषिभिः । कटरोगहरा हिक्कानाशिनी ' गणनामके ' ॥ ॥ १८३ ॥ २५ तेजोवती । म० थोर मालकांगोणी । तेजोवती वह्निरुता तथैव घनकप्रभा । तीक्ष्णा सुवर्णनकुली त्वपणा तदनन्तरम् ॥ १८४ ॥ अग्निदीप्ता तु तेजस्वी तथा सुरलता मता । अग्निफलाऽग्निगर्भा च फगुनी या-यसी स्मृता ॥ १८५ ॥ तत दौल्सना चैव सुतेगा तदनन्तरम् । तीव्रा चैव तु काकांटी तथैव वायमार्दनी ॥ १८६ ॥ शीलता शीलता सौम्या माह्नी स्वर्णकिंशुका । पारावतपदी पीना पीततैला यशस्विनी ॥ १८७ ॥

मेध्या मेधावती धीरा प्रोक्ता 'राजनिघंटके'। तेजोव्हा तेजनी शीता
अशोघ्रा वल्कला तथा ॥ १८८ ॥ पारिजाता महौजस्वी प्रोक्ता 'धन्वं-
तरौ' ध्रुवम्। काकांडकी रुक्षफला वेगा काकादनी तथा ॥ १८९ ॥
पिण्या कूटत्वचा चेव "केयदेवे" प्रकीर्तिता ॥ १९० ॥ २६. श्वेतगिरि
कर्णी। म० पांढरी गोकर्णी। अश्वखुराऽद्रिकर्णी च कटभी दधिपुष्पिका।
गर्दभी शीतपुष्पी च श्वेतस्पंदापराजिता ॥ १९१ ॥ श्वेतभद्रा सुपुष्पी
च विषहृन्नी तदुत्तरम्। नागपर्यायकर्णी च अश्वाव्हादिखुरी तथा॥
॥ १९२ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः। श्वेतपुष्पा
तु श्वेता च तथैव गजकर्णिका ॥ १९३ ॥ श्वेतनामा तथा प्रोक्ता 'धन्वं-
तरिनिघंटके'। श्वेतस्पंदा विषघ्नीकाऽमेदा च 'केयदेवके' ॥ १९४ ॥
शीताऽपराजिता चेव तथेव मोहनाशिनी। प्रोक्ता मदनपाले तु भिषक्-
शास्त्रविशारदैः ॥ १९५ ॥ अस्फोटा विष्णुक्रांता च प्रोक्ता 'भावप्र-
काशके'। तथा 'गणनिघंटे' च वाजिखुरा प्रकीर्तिता ॥ १९६ ॥ पंच-
विंशतिसंख्याका संप्रोक्ता भिषजां वरैः। गुणा । श्वेता तु गिरिकर्णी
स्यात् हिमा तिक्ता च पित्तनुत् ॥ १९७ ॥ चक्षुष्या विषहा प्रोक्ता
त्रिदोषशमनी 'नृपे'। ग्रहघ्नी कटमूलघ्नी कुष्ठमेहामनाशिनी ॥ १९८ ॥
व्रणशोफहरा प्रोक्ता 'केयदेवनिघंटके'। मूर्धशूलहरा चेव सद्य स्याद्
'द्रव्यनामके' ॥ १९९ ॥ ग्रहघ्नी 'मदने' प्रोक्ता कंठरोगहरा 'तथा'।
हिमवीर्या मदा स्निग्धा वातपित्तहरा 'स्मरे' ॥ २०० ॥ २७ महानीला।
म. निळी सुपली। महानीला नीलपूर्वा गिरिकर्णी गवादनी। व्यक्त-
गंधा निलस्पंदा प्रोक्ता 'राजनिघंटके' ॥ १ ॥ उग्रगंधा बहिवाता
प्रोक्ता 'धन्वंतरौ' ध्रुवम्। महाश्वेता पाणिनी च घर्षा च विभवा-
शिका ॥ २ ॥ 'केयदेवे' भिषक्श्रेष्ठैर्गदिता नेव संशय। महाकृष्णा
नीलपुष्पा 'द्रव्यरत्नाकरे' स्मृता ॥ २०३ ॥ अव्यक्तकृष्णा वशी
स्निग्धा (?) रक्ता तथा। प्रोक्ता 'गणनिघंटे च भिषग्विद्याविशारदैः
॥ २०४ ॥ सर्वा षोडशसंख्याका भिषग्भि- परिकीर्तिता ॥ गुणा.। नीली
तु गिरिकर्णी स्यात्तिक्ता च शिशिरा तथा ॥ २०५ ॥ रक्तातिसार हंत्री
च ज्वरदाहहरा तथा। उन्मादमदहृत श्वासकासच्छर्दिहरा 'नृपे'
॥२०६॥ कफकुष्ठक्षयहरा पित्तजंतुहरा तथा। ग्रहघ्नी कंठरोगघ्नी प्रोक्ता

ग्नी ' कैयदेवे ' प्रकीर्तिता । नखगंधा खसनी च अजाजी ' गणनामक ' ॥ २२६ ॥ गुणाः । वस्ताग्नी स्यात्कटुरसा वातदोषविनाशिनी । सुबीज-गर्भजननी कीर्तिता भिषगुत्तमैः ॥ २२७ ॥ बीजदा गर्भजननी प्रोक्ता ' राजनिघंटके '॥ अन्येगुणास्तूपर्युक्तास्तस्मादत्र न वक्ष्यते ॥ २२८ ॥ लघु तिक्ता कषाया च मधुरा च हिमा तथा ॥ कटुपाका श्लेष्मापित्तनाशनी वातकोपनी ॥ २२९ ॥ ' कैयदेवे ' निघंटे च प्रोक्ता वैद्यविचक्षणैः । ३११ सामवल्ली । म०॥रानशेर॥ सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता ॥ २३० ॥ सोमदा गुल्मवल्ली च यज्ञवल्ली द्विजाप्रिया सामक्षीरं तु सामा च यज्ञागं तदनंतरं ॥२३१॥ प्रोक्ता 'राजनिघंटे'च भिषक्शास्त्रविशारदैः । यज्ञसेना ' मदनके ' प्रोक्ता वैद्यविशारदैः ॥ २३२ ॥ ' भावप्रकाशे ' सामार्क्षा सस्मृता भिषजां वरैः ॥ २३३ ॥ धन्वंतरं परा नता पक्षगमी यधिप्रिया । महायशा महार्या च श्येनदूता मखप्रभुः ॥ २३४ ॥ भद्रीं तु विशदा चैव तथैव रुदरस्तरा॥ यज्ञा चैव हि समोक्ता ' कैयदेवे ' भिषग्जनैः ॥ २३५॥ श्येनाकृतश्चक्रतरमहापी यज्ञलातृका । प्रोक्ता ' गणनिघंटे ' च भिषग्विशदै-कोनसप्तका ॥ २३६ ॥ गुणाः । सामवल्ली कटु शीता मधुरा पित्तदाहहृत् । तृष्णोपतिपिनाशनी प्रोक्ता वैद्यविचक्षणैः ॥ २३७ ॥ ३२ मातसामा । म रानशेर-भेद । सोमवल्लीभेदत सा प्रोक्ता माहेयवल्लिरा । सौम्या महि-षवल्ली च प्रतिसोमाप्रवल्लिका ॥ २३८ ॥ काण्डशाखाऽपत्रवल्ली प्रोक्ता ' राजनिघंटके ॥ २३९ ॥ यदसत्याम्मुनिभिः प्रोक्ता वैद्यशास्त्रविचक्षणैः । रसवीर्यविपाके च सोमवल्लीसमा स्मृता ॥ २४० ॥ मेषकुम्गुणैः प्रोक्ता धातुसाम्यकरा तथा । सोमवल्ली सप्तगुणा प्रोक्ता महिषवल्लिका ॥२४१॥ ३३ वत्सादनी । म चासनवेल । वत्सादनी सोमवल्ली विकाता मोचका-भिधा । पाताल्गरुडी तार्क्षी सौपर्णी गरुडी तथा ॥ २४२ ॥ महाबला दीर्घकाडा दीर्घवल्ली तदुत्तरम् । तथा दृढलता चैव प्रोक्ता ' राजनिघ-ण्टके ' ॥ २४३ ॥ सुदर्शना च चक्राङ्का तथैव मधुपर्णिका । चद्ष्याली (?) मेचका च ' कैयदेवे ' प्रकीर्तिता ॥ २४४ ॥ छिन्नी महाजना चैव छिन्ना छिन्ना तथैव तु । ' द्रव्यरत्नाकरे ' चैव प्रोक्ता विंशतिसंख्यया ॥ २४५ ॥ गुणाः । वत्सादनी तु मधुरा पित्तदाहास्त्रनाशिनी । वृष्या मत

र्पणी रुच्या विषदोषनिवारिणी । प्रोक्ता ' राजनिघंटे ' च वैद्यविद्यावि-
शारदैः ॥ २४६ ॥ उष्णशोफकफघ्नी वातहा 'कैयदेवके'। ग्राही वृष्या
' द्रव्यनामे ' कफघ्नी वायुहृत् ' नृपे ' ॥ २४७ ॥ ३४. गोपालकर्कटी । म.
गोपालकांकडी । गोपालकर्कटी वन्या तथैव गोपलर्कटी । क्षुद्रेर्वारु क्षुद्र-
फला गोपाली क्षुद्रचिर्भटा ॥ २४८ ॥ प्रोक्ता ' राजनिघंटे ' तु सप्तसंख्या
भिषग्जनैः । गुण. । गोपालकर्कटी शीता मधुरा पित्तनाशिनी । मूत्रकृ-
च्छ्राश्मरीभेददोषहा ' राजनामके ' ॥ २४९ ॥ ३५. काकनासा । म. थोरका-
कुंडळ । काकनासा ध्वांक्षनासा काकतुंडी तु वायसी । सुरंगी तस्करस्नायुः
ध्वांक्षतुंडा सुनासिका । वायसाव्हा ध्वांक्षवल्ली काकाक्षी ध्वांक्षनासिका
॥ २५० ॥ काकप्राणा शिरालो च प्रोक्ता ' राजनिघंटके ' । ध्वांक्षतुंड-
फला ध्वांक्षी प्रोक्ता ' धन्वंतरौ ' तथा ॥ २५१ ॥ काकांगी काकसंज्ञा
च चोरस्नायुशिरोचला । काकाख्या जीवनीया च ' कैयदेवे ' प्रकीर्ति-
ता ॥ २५२ ॥ ध्वांक्षेष्टा तस्करवृका ' द्रव्यरत्नाकरे ' स्मृता । काकतुंड-
फला चैव प्रोक्ता ' धन्वंतरौ ' तथा ॥ २५३ ॥ शिरोयलेति मुनिभिः
प्रोक्ता ' गणनिघंटके ' । पंचविंशतिसंख्याका प्रोच्यते भिषग्वरैः
॥ २५४ ॥ गुण । काकनासा तु मधुरा शिशिरा पित्तनाशिनी । रसायनी
दार्ढ्यकरी वलीपलितहा ' नृपे ' ॥ २५५ ॥ काकादनी । म लघुकाकुडळ ।
काकादनी काकपीलु काकशिंबी तु रक्तला । ध्वांक्षादनी वक्रशल्या
दुर्मोहा वायसादनी ॥ २५६ ॥ काकतुडी ध्वांक्षनखी वायसी काकदं-
तिका । ध्वांक्षदंतीति विदिता प्रोक्ता ' राजनिघंटके ' ॥ २५७ ॥ वक्र-
शल्या काकणती प्रोक्ता ' धन्वंतरौ ' तथा । पंचभूतरयका प्रोक्ता पु-
रातनचिकित्सकैः ॥ २५८ ॥ गुण । काकादनी कटूष्णा च तिक्ता चैव
रसायनी । वातदोषहरा रुच्या वलीपलितस्तंभिनी ॥ २५९ ॥ प्रोक्ता
' राजनिघंटे ' च पुरातनचिकित्सकैः । केल्या शिरोदोषहरा ग्रहहा ' द्र-
व्यनामके ' ॥ २६० ॥ कषाया च रसे पाके कटुः स्यात्कफनाशिनी ।
शोफदाहा च वमनी चित्रकुष्ठविनाशिनी ॥ २६० ॥ ' कैयदेवनिघंटे ' च
प्रोक्ता वैद्यविचक्षणैः । ३७ रक्तगुंजा । म. तांबडी गुंज । गुंजा सौम्यशिखंडी
च कृष्णला त्वम्णा तथा ॥ २६१ ॥ ताम्रिका शीतपाके च उच्चटा द्र-

घणचूडिका । रक्ता तु रक्तिका चैव किंभोजी भिल्लभूषणा ॥ २६२ ॥
एवा ' राजनिघंटे ' तु संप्रोक्ता भिषजा वरैः । चटकी काकसाव्हा च
प्रोक्ता ' धन्वतरौ ' तथा ॥ २६३ ॥ ततस्तु कृष्णकांबोजी तथैव काक-
मंलिका । प्रोक्ता ' गणनिघंटे ' तु पुरातनचिकित्सकैः ॥ २६४ ॥ कृष्ण-
कातरकाकुडी ' कैयदेवे ' स्मृता बुधैः । शिखंडिका काकणती ' द्रव्य-
रत्नाकरे ' स्मृता ॥ २६५ ॥ काकर्धाव्ह्यगारवल्ली प्रोक्ता 'भावप्रकाशके'
चक्रलाऽमरकोशे तु कविभिः परिकीर्तिता ॥ २६६ ॥ चूडामणी तु वन्या
च तथा श्यामलचूडका । प्रोक्ता ' राजनिघंटे ' तु कविभिः समर्थिताऽलि
॥ २६७ ॥ ३८ श्वेतगुंजा । श्वेतगुंजाभिरिद्रीका लक्ष्मकाकादनी तथा । का-
कपिल्लुः वक्रशल्या प्रोक्ता ' राजनिघंटके ॥ २६८ ॥ ' धन्वतरिनिघंटे ,
तु प्रोक्ता शीतोच्चटा ध्रुवम् । श्वेतपाकी तु चूडाला दुर्भाषा चन्द्रिका
तथा ॥ २६९ ॥ चूडा च वक्रशल्येति ' कैयदेवे ' प्रकीर्तिता । चडा तु
दुर्मुखा चैव ' द्रव्यरत्नाकरे ' स्मृता ॥ २७० ॥ ततो ' मदनपाले ' तु
दुर्मोका परिकीर्तिता । बालभद्री निरटीया प्रोक्ता ' गणनिघंटके ' ॥
॥ २७१ ॥ ततस्तु श्वेतकाभोजी ' राजमान्निं निघंटके । प्रोक्तात्वाद्वदा-
संख्याका भिषग्विद्याविशारदैः ॥ २७२ ॥ गुणा । गुंजाद्वय तु तीक्ष्णोष्ण
बीजं वांतिकरं तथा । पत्रशूलविषे हरति वदये श्वेतरूपे ' स्मृतम् ॥
॥ २७३ ॥ वातपित्तज्वरे हरति मुखशोषभ्रमापहम् । श्वासतृष्णामदान्
हरति रक्तार्बुदविनाशनम् ॥ २७४ ॥ ' भावप्रकाशे ' संप्रोक्तं पुरातन-
भिषग्वरैः । रस्ने तिक्ता कषाया च कफपित्तापहारिणी ॥ २७५ ॥ भ्रमु
घ्या मुकल्या केश्या रक्षत्वग्ज्वरदायिनी । इन्द्रलुप्तहरा चैव मदमोहप्रहा
तथा । रक्षोग्रह विष हरति कडुकुष्ठव्रणापहम् । ' धन्वंतरिकैयदेवे ' च
संप्रोक्तं वैद्यनायकैः ॥ २७६ ॥ ३९ वृद्धदारुः । नामा । अवेगी वृद्धदारू
च जुगशी दीर्घतालुक । वृद्धपुष्पी स्वर्जात्री च तथैव छांगलांत्रिका
॥ २७७ ॥ जीर्णदारु जीर्णफजी सुपुष्पी त्वजरा तथा । सूक्ष्मपर्णा भिषक्-
श्रेष्ठैः प्रोक्ता ' राजनिघंटके ' ॥ २७८ ॥ जलुका चैव संप्रोक्ता ' धन्वंत-
रिनिघंटके ' । ' द्रव्यरत्नाकरे ' चैव छागला परिकीर्तिता ॥ २७९ ॥
नागको जीर्णदारश्च शतकोटरपुष्पिका । छागी चैव तु विन्ध्याला तथा

महिषवल्लरी ॥ २८० ॥ 'कैयदेवे 'भिषक्श्रेष्ठैः प्रोच्यते नैव संशयः। छोंगडी ऋक्षगंधेति प्रोक्ता 'भावप्रकाशके' ॥ २८१ ॥ अंतर्कोटरपुष्पी च तीरपालक एव च। एकविंशतिसंख्याका भिषग्भिः कथिता ध्रुवम् ॥२८२॥ गुण । वृद्धदारु पिच्छिला च कफवातापहारिणी। वल्या कासामदोषघ्नी प्रोक्ता ' राजनिघंटके ' ॥ २८३ ॥ रसायनां च शुक्रार्द्धवलमेधाग्निवृद्धिकृत् ॥ २८४ ॥ स्वरकांतिकर चैव सर. शोफामवातहृत्। वातमेहकफान् हंति प्रोक्तं ' कैयनिघंटके ' ॥२८५॥ वृद्धदारुद्वयं तिक्तमुष्णं कटुसमीरितम्। श्वयथुश्लेष्मदोषघ्नं वातोदरहरं ' धनी ' ॥ २८६ ॥ रक्तार्शोनाशनं प्रोक्तं वैद्यैर्मदनपालके ' ॥ ४० ॥ ताम्रवल्ली। कैवर्तिका सुरंगा च लतावल्ली द्रुमारुहा ॥ २८७ ॥ रंगिणी वस्त्ररंगा च सुभगो तदनंतरम्। ताली तमाली ताम्रा च ताम्रवल्ली तमालिका ॥ २८८ ॥ सूक्ष्मवल्ली सुलोमा च शोधनी मालिका तथा। द्विपन्ञिसंख्यका प्रोक्ता भिषग्विद्याविशारदैः ॥ २८९ ॥ गुण । कैवर्ती लघुवृष्या च कषाया कफनाशिनी। मदाग्निश्वासकासांश्च हंतीति 'राजनामके ' ॥२९० ॥ कांडीर । म कांडवेल। कांडीर कांडकटुको नासासंवेदन पटु। अम्लकांडस्तोयवल्ली कारवल्ली सुकांडक ॥ २९१ ॥ प्रोक्ता राजनिघंटे ' तु भिषक्शास्त्रविशारदैः। धन्वंतरे, तूम्रकांडा कविभिः परिकीर्तिता ॥ २९२ ॥ कांडीरी तु घटिल्लश्च तथैव कांडघटिलका। नासाछिंवेदनश्चैव ' कैयदेवे ' प्रकीर्तिता ॥ २९३॥ कांडवेदनकश्चैव प्रोक्ता ' गणनिघंटके। पंचभूसंख्यका प्रोक्ता भिषक्श्रेष्ठैर्न संशय ॥ २९४ ॥ गुण । कांडीर कटुतिक्तोष्णसर. प्रोक्तस्तथैव च । व्रणगुल्मोदरप्लीहशूलकृमविनाशकृत् ॥ २९५ ॥ अग्निप्रदीपक प्रोक्तो ' राजनामनिघंटके। वातमलहरश्चैव ' द्रव्यनामनिघंटके, ॥ २९६ ॥ कफपित्तकृमीनुग्रान् हंतीति ' गणनामके ४१. जंतुघ्ना। उत्तरदेशे पद्मावती । जंतुघ्ना जंतुकारी च जंतनी चक्रवर्तिनी ॥ २९७ ॥ निर्यकफला निशांधा च बहुपत्री सुपत्रिका। राजवृक्षा जनेष्टा च कपिकच्छुफलोपमा ॥ २९८ ॥ रंजनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका। निर्ज्ञूलिका कृष्णरुहा ग्रंथिपर्ण. सुगंधिका ॥ २९९ ॥ तरवल्ली दीर्घफला प्रोक्ता 'राजनिघंटके ' सहर्ष. ऋतुकश्चैव प्रोक्त ' धन्वन्तरी, भुजग ॥ ३०० ॥ जंतुघ्ना तु मरघ्ना

प्रोक्ता मुरली 'रामनामके'। ५० पलाशी । म० पळशी । पलाशी पत्रवल्ली च पर्णवल्ली तथैव च ॥ ३३४ ॥ सुपर्णी सुपर्णी च दीर्घवल्ली विषादनी । अम्लपत्री दीर्घपत्री रसाम्ला तदनंतरम् ॥ ३३५ ॥ अम्ली अम्लातकी चैव कांजिका च पलाशिका । प्रोक्ता 'राजनिघंटे' तु चतुर्दशभिषग्वरैः ॥ ३३६ ॥ गुणाः । पलाशी मधुराम्ला च मुखदोषविनाशिनी । अरोचकहरा पथ्या पित्तकोपकरी 'नृप' ॥ ३३७ ॥ इति सिद्धेश्वरकृतराघवविरचिते गुडूच्यादि—प्रथमवर्गः समाप्तः ।

## २. शताव्हादि वर्ग.

१. शताव्हा । म० बाळंतशोप । गु० सुवा । शताव्हा शतपुष्पा च मिशिर्घोषा तु पोतिका । अहिच्छत्रा सुवाकृपुष्पी माधवी कारवी शिफा ॥ ३३८ ॥ संघातपत्रिका छत्रा वज्रपुष्पा सुपुष्पिका । शतप्रसूना बहुला पुष्पाव्हा शतपत्रिका ॥ ३३९ ॥ वनपुष्पा भूरिपुष्पा सुगंधा सूक्ष्मपत्रिका । गंधाधिकातिछत्रा च प्रोक्ता 'राजनिघंटके' ॥ ३४० ॥ अवाक्पुष्पी घोषवती शफा च तदनंतरम् । मधुरा योनिदोषघ्नी मागधी च शटा तथा ॥ ३४१ ॥ 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजा वरैः । शफा शताव्हाऽवाक्पुष्पी चेटिका चेति मागधा ॥ ३४२ ॥ पणा 'मदनपाले' तु भिषग्भिः परिकीर्तिता । तथा संहतपत्री च शिवछत्रा ततः परम् ॥ ३४३ ॥ 'भावप्रकाशे' संप्रोक्ता भिषक्शास्त्रविशारदैः । अवाक्पुष्पा मधुरसा सेव्रा संहतपत्रिका ॥ ३४४ ॥ प्रोक्ता 'गणनिघंटे' तु चतुश्चत्वारिंशत्प्रका । शताव्हा कटु तिक्ता च स्निग्धा श्लेष्मानिलारमित् ॥ ३४५ ॥ ज्वरनेत्रव्रणशूलहिक्कानिहृ 'द्रव्यनामके' । श्लेष्मवातहरा चोष्णा संप्रोक्ता 'धन्वनामके' ॥ ३४६ ॥ पित्तघ्ना कफपित्तघ्नी मेध्या च लघु दीपनी । शूलदाहश्रमीतृष्णागुल्मयोनिकृमा हरा ॥ ३४७ ॥ 'द्रव्यरत्नाकरे' चेयं भिषग्भिः परिकीर्तिता । २ मिश्रेया । म० बडीशोप । गु० वरियाळी । मिश्रेया तालपर्णी च तालपत्री मिशी तथा ॥ ३४८ ॥ शालेया च शीतशिवा शालिका वनजा तथा । अवाक्पुष्पी च मधुरी छत्रा संहनत्

वातश्लेष्महरा रुच्या नानानेत्ररुजापहा ॥ १८३ ॥ ८ कंटकारी । म० रिंगणी । गु० बेठी भोरिंगणी । कंटकारी कंटकिनी दुस्पर्शा तु महर्षिगो । क्षुद्रा व्याघ्री निदिग्धा च द्राविणी क्षुद्रकंटका ॥ १८४ ॥ बहुकंटा क्षुद्रकंटा तथा कंटालिका मता । तत क्षुद्रफला चैव प्रोक्ता 'राजनिघंटके' ॥ १८५ ॥ 'धन्वन्तरौ' धावनीति 'कैयदेवे' प्रचोदनी । बहुगुडाकुञ्ची चैव वार्ताकी तदनंतरम् ॥ १८६ ॥ स्पृशी च राष्ट्रिका चैव प्रोक्ता 'त्वमरकोशके' । गुणा । कंटकारी कटूष्णा च दीपनी श्वासकासहा ॥ १८७ ॥ प्रतिश्यायश्लेष्मवातज्वरहा 'राजनामके' । आमवातारुचिहरा कासहृद्रोगहा 'धने' ॥ १८८ ॥ तिक्ता रुक्षा भेदिनी च पाचनी पार्श्वरोगजित् । कृच्छ्रपीनसहन्त्री च मलघ्नके कटूष्णका ॥ १८९ ॥ फलगुणा । भेदनं रोचनं हृद्य तिक्त पित्ताग्निकृत्तथा । श्लेष्मवायुकण्डूकासमेहकृमिज्वरापहा ॥ १९० ॥ 'कैयदेवे' भिषक्श्रेष्ठे 'द्रव्ये' चैव सरा स्मृता । आस्यवैरस्यहन्त्री च ग्राही कुष्ठविनाशिनी ॥१९१ ॥ शूलाग्निमांद्यहा प्रोक्ता वैद्यै 'भावप्रकाशके' । ९ लक्ष्मणा । म० पांढरी रिंगणी । गु० धोळी भोरिंगणी । क्षेत्रदूती तु श्वेता च लक्ष्मणा सितसिंहिका ॥ १९२ ॥ सितक्षुद्र सिता छिन्ना क्षुद्रवार्ताकिनी तथा । बृहद्वार्ताकिनी चैव क्षेत्रजा कण्टेश्वरी ॥ १९३ ॥ निस्नेहफलिका रामा सितकटा महौषधी । गर्दभी चन्द्रिका ग्राही चन्द्रपुष्पा प्रियंकरी ॥ १९४ ॥ नाकुली दुर्लभा रास्ना प्रोक्ता 'राजनिघंटके' । कामघ्नी क्षुद्रभांटा च किण्वा तु कपटा तथा ॥ १९५ ॥ मालिना मलिनांगी च छिन्नरुहा रुतागिनी । बहुधामा महर्षीका कुमती तदनंतरम् ॥ १९६ ॥ 'धन्वन्तरिनिघंटे' तु समोक्ता भिषजा वरैः । चन्द्रपुष्पी तु वनजा पुत्रदा च दूतिका तथा ॥ १९७ ॥ श्वेतलक्ष्मणा 'कैयदेवे' भिषग्भिः परिकीर्तिता । चन्द्रहासेति मुनिभिः प्रोक्ता 'मदनपालके' ॥ १९८ ॥ गर्भदा चन्द्रभा चन्द्रा प्रोक्ता 'भावप्रकाशके' । पत्यारिशतृत्रपश्चैव लक्ष्मणा मात्स्या भिषग्जनैः ॥ १९९ ॥ गुणा । श्वेता तु कंटकारी च रुच्योक्ता

कफवातजित् । पत्रपुष्प्या दीपनी प्रोक्ता तथा रसनियामका ॥ ४०० ॥ 'राजनामनिघण्टे' च 'द्रव्ये' स्याद्गर्भकारिणी । पार्श्वपीडाहरा चैव स्मरा 'भावप्रकाशके' ॥ ४०१ ॥ तत्रैव तत्फलगुण शाक्रेरत्नमित्यपि । १० पृश्निपर्णी । म० पिठवण, रानभाल, शेवरा । गु० नहानो समेरवो, पिठवण । कलशी पृश्निपर्णी च तथैव च महागुहा ॥४०२॥ शृगालविन्ना धमनी मेखला लाङ्गुली गुहा । क्रोष्टपुच्छी च शृगाली सिंहपुच्छी तथैव च ॥ ४०३ ॥ पृथक्पर्णी दीर्घपर्णी दीर्घा क्रोष्टुकमेखला । चित्रपर्ण्युप-चित्रा च श्वपुच्छा तदनन्तरम् ॥ ४०४ ॥ प्रोक्ता 'राजनिघंटे' तु भिष कृत्यात्मविशारदे । अघ्री शृगालविन्ना च कलपर्णी तु क्रोष्टुका ॥४०५॥ कपित्थका धावनीति 'धन्वंतरिनिघण्टके' । क्षीतनी धातनी चैव स्निग्ध पर्णी तथैव च ॥४०६॥ 'कैयदेवे' भिषक्श्रेष्ठे समोक्ता चैव सहाय । शृगालवृन्ना जटिला प्रोक्ता 'मदनपालके' ॥ ४०७ ॥ अग्निपर्णी क्रो-ष्टुवन्ना प्रोक्ता 'भावप्रकाशके' । शृगालविन्न्या पर्णी तु तथैव क्रोष्टुपु-च्छिका ॥ ४०८ ॥ प्रोक्ता 'गणनिघंटे' तु वेदवन्हिमिथा ध्रुवम् । गुणा । पृश्निपर्णी कटूष्णाम्ला तिक्ता कासातिसारजित् ॥ ४०९ ॥ वात-ज्वरव्रणोन्मादादाहहा 'राजनामके' । रक्तपित्तहरा रूक्षा हिक्काहा 'ग-णनामके' ॥ ४१० ॥ त्रिदोषज्वरकासघ्नी 'द्रव्यरत्ने' प्रकीर्तिता । रक्तातिसारहन्त्री च लघु वृष्या तृषापहा ॥ ४११ ॥ दाहवातिहरा प्रोक्ता वैद्यै 'मदनपालके' । 'भावप्रकाशे' समोक्ता वृष्या च मधुरा रसा ॥ ॥ ४१२ ॥ श्वासहन्त्रीति विज्ञेया वैद्यैर्विद्याविशारदे । ११ गोक्षुरक । म० गोखरू । गु० गोखरू । गोक्षुरको गोक्षुरक क्षुरामश्च श्वदंष्ट्र ॥ ४१३ ॥ कटकी भद्रकण्टश्च व्यालदंष्ट्र क्षुरस्तथा । ततश्च क्रमशश्चैव दुश्चक्रम महांगको ॥ ४१४ ॥ प्रोक्ता 'राजनिघंटे' च रुद्रसंख्या भिष-ग्जने । १२ वनशृंगाटक । म० सराटे । गु० गोखरू । ततो गोक्षुरकश्चैव तथा कटी त्रिकंटक ॥ ४१५ ॥ षडगो बहुकण्टश्च क्षुरो गोकंटकस्तथा । पङ्कषा कटफल्गुन्तु क्षुद्रक्षुरस्तथा ॥ ४१६ ॥ तथैव

वातपित्तकफासृग्घ्नो 'गणे' प्रोक्ता भिषग्जनैः ॥ ४३३ ॥ १४ वासकः। म० अडुळसा । गु० अरडुशी । वासकः सिंहिका वासा भिषङ्माता वमा- दनी। अटरूषः सिंहमुखी सिंही कंठीरवी वृषा॥४३४॥शितकर्णी वाजिदंता नासा पंचमुखी तथा । सिंहपर्णी मृगेंद्राणी प्रोक्ता 'राजनिघंटके' ॥४३५॥ सिंहास्या शितनखी च मातृका सिंहवल्लभा । वाइदंतो ? भिषक्छ्रेष्ठैः 'के- यदेवे' प्रकीर्तिता ॥ ४३६॥ सिंहकश्च महद्भिश्चैः प्रोक्तो 'मगानिघंटके'। सिंही 'त्वमरकोशे' च त्रयोविंशतिसंख्यकाः ॥ ४३७ ॥ वासा तिक्ता कटुः शीता कासघ्ना रक्तपित्तहा । कफज्वरक्षयश्वासनाशनी 'राजनामके' ॥ ४३८ ॥ ऊर्ध्वासृक्पित्तहंत्रीति 'गणे' प्रोक्ता चिकित्सकैः । हृच्छर्दि- कुष्ठहंत्री च तृषाघ्ना 'धन्वनामके' ॥ ४३९ ॥ ज्वरमेहारुचिघ्नी च वा- तला कफनाशिनी । 'कैयदेवे' भिषक्छ्रेष्ठे 'द्रव्ये' मेहविनाशिनी ॥ ॥ ४४० ॥ १५ शितिवार । म० कुरडू । गु० लांबडी । शितिवारः शितवरः सूच्याह्वः सूचिपत्रकः । श्रीवारकः शिखी स्वस्तिकः सु- निषण्णकः ॥ ४४१ ॥ सूचीदला कुक्कुटश्च ततः श्वेतावरस्तथा । मेषाक्षश्च ग्राहकश्चैव कुक्कुरस्तदनंतरम् ॥ ४४२ ॥ प्रोक्तो 'राजनिघंटे' तु भि- षक्छास्त्रविचक्षणैः । शीतिवारः सनिषण्णस्तद्वत्-सीवारको वनो ॥४४३॥ कुंटिका क्षेत्रभूषा कुंटी शीर्षमंजरी । श्रीहस्तिनी सिंहकेशी चुबकः क्षेत्रनाशिनी ॥ ४४४ ॥ कृष्णमूलश्चपुला चैव 'कैयदेवे' प्रकीर्तिता । भ- केडी हस्तिनी चैव श्वेतवारक एव तु ॥ ४४५ ॥ 'द्रव्यरत्नाकरे' चैव प्रोक्ता पूर्वचिकित्सकैः । पूर्णाकश्च भिषक्छ्रेष्ठैः प्रोक्तो 'भावप्रकाशके' ॥ ४४६ ॥ एकत्रिंशतसंख्यका च प्रोक्तया भिषजां वरैः । गुणाः । शि- तिवारा च संग्राही कषायोष्णा त्रिदोषनुत् ॥ ४४७ ॥ मेहारुचिज्वरहरा दाहहा 'राजनामके' । रूक्षा वृष्या गुल्मश्चैव तथा मारुतपित्तकृत्॥४४८॥ विषश्वयथुनाशा च वस्तिवातहरा तथा । कृच्छ्राश्मककफश्वासघ्नो प्रोक्ता 'कैयनिघंटके' ॥ ४४९ ॥ 'द्रव्ये' तु कफवातघ्नो वन्हिकृच्च मता स्मृता । १६ क्षुद्र-दुरालभा । म० लहान धमासा । गु० ल-

हानो धमासो । करमा दनिक्रा चैव तथैव करभप्रिया ॥ ४९० ॥ ग्राहिणी फणिहा चैव कषाया चोष्ट्रमासिका । अजादन्यनमक्षा च तथैव च विशाग्दा ॥ ४९१ ॥ कच्छुरा फणिहारी च सूक्ष्मपत्रा मरुद्भवा । विरूपा मरुजा जाता कपायी 'गणनामके' ॥ ४९२ ॥ एकोनविंशति प्रोक्ता पुरातनचिकित्सकै । गुणाः । सुद्रा दुरालभा चाम्ला ज्वरकुष्ठविनाशिनी ॥ ४९३ ॥ श्वासकासभ्रमघ्नी च तथा पारदशुद्धिदा । १७ दुरालभा । म० धमासा, काटेचुबुक । गु० धमासो । धन्वयासो दुरालभा ताम्रमूली च कच्छुरा ॥ ४९४ ॥ दुरालभा च दुःस्पर्शा धन्वी धन्वयवासका । प्रबोधनी सूक्ष्मदला विरूपा दुरभिग्रहा ॥ ४९५ ॥ दुर्लभा दुःप्रधर्षी च प्रोक्ता 'राजनिघंटके' । यासा तु कष्टरा चैव प्रोक्ता 'धन्वंतरौ' ध्रुवं ॥ ४९६ ॥ तथा 'मदनपाले' तु यासकेति स्मृता बुधैः । मासा 'गणनिघंटे' च प्रोक्ता त्वष्टादशैव तु ॥ ४९७ ॥ गुणाः । दुरालभा कटुस्तिक्ता वातपित्तज्वरापहा । उष्णा गुल्मप्रमेहघ्नी प्रोक्ता 'राजनिघंटे' ॥ ४९८ ॥ १८ अग्निदमनी । म० आगीदवणा । गु० आगियो धमासो । ततोऽग्निदमनी चैव बन्हुकटा तथैव च । वह्निशिखा चैव तद्वत् गुच्छफला तथा ॥ ४९९ ॥ तत क्षुद्रफला चैव क्षुद्रदुःस्पर्शिका तथा । तथैव क्षुद्रदुःस्पर्शा दमनी तदनन्तरम् ॥ ४६० ॥ मर्त्येन्द्रमाता विदिता प्रोक्ता 'राजनिघंटके' । दशसंख्या भिषग्भिस्तु प्रोच्यते नैव संशय ॥ ४६१ ॥ गुणा । अग्निदमनी वह्नी चोष्णा रूक्षा तथैव च । रुच्या वातकफघ्नी च हृद्या च दीपनी तथा ॥ ४६२ ॥ गुल्मप्लीहहरा प्रोक्ता 'राजनामनिघंटके' ॥ १९ बाकुची । म० बावची । गु० बावची । बावुची सोमराजी च सोमवल्ली सुवल्लिका ॥ ४६३ ॥ सिता सितावरी चैव चन्द्ररेखा च चंद्रिका । सुप्रभा कुष्ठहंत्री च कालोजी पूतिगंधिका ॥ ४६४ ॥ अवल्गुजा चान्द्रमसा रानी च तदनन्तरम् ॥ ऐन्दवी कालमेषी च कृष्णोत्पली तथैव तु ॥ ४६५ ॥ तत इणफला चैव वल्गुजा च प्रभा तथा । बाकुची चैव विदिता 'राजनामनिघण्टे' ॥ ४६६ ॥ पूतिफला

चंद्रलेखा प्रोक्ता 'धन्वंतरौ' ध्रुवं । ततस्तु चंद्रशाख्या चंडरी चांद्रिका तथा ॥ ४६७ ॥ जीवना मलयू चैव इंदुराट् कान्तमोदिका । सोमखंडा सुवल्लीका 'केयदेवे' प्रकीर्तिता ॥ ४६८ ॥ तथा 'मदनपाले' तु वरा प्रोक्ता मनीषिभिः । अहिहरो कुष्ठहरिः प्रोक्ता 'गणनिघंटके' ॥४६९॥ चत्वारिंशत् संज्ञकेति संप्रोक्ता भिषजां वरैः । गुणाः । बाकुची कटुतिक्तोष्णा कृमिकुष्ठकफापहा ॥ ४७० ॥ प्रोक्ता 'राजनिघंटके' च वैद्यविद्याविचक्षणैः । तत्फलं पित्तलं कुष्ठकफानिलहरं कटु ॥ ४७१ ॥ 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्तं नैव संशयः । 'द्रव्यरत्नाकरे' प्रोक्तं वायजंतुविनाशकृत् ॥ ४७२ ॥ तत्फलं श्वेतकुष्ठघ्नं कफवातहरं 'गणे' । केश्यं शोथामपाण्डुघ्नं फलं 'भावप्रकाशके' ॥ ४७३॥ त्वग्दोषविषकंडूघ्नं सर्जुनाशकरं स्मृतं । 'धन्वंतरिनिघंटे' च व्रणहंत प्रकीर्तितं ॥ ४७४ ॥ दीपनी मधुरा रूक्षा रुच्या हृद्या तथैव च । विष्टंभी च गुरा मेध्या रक्तपित्तकफापहा ॥४७५॥ श्वासकासकृमीमेह*ज्वरहंत्रीति 'केयके' । २० शाणपुष्पी । म० खुळखुळा । गु० शणपुष्पी । शणपुष्पी बृहत्पुष्पी शाणिका शावघंटिका ॥ ४७६ ॥ पीतपुष्पी स्थूलफला कोमला माल्यपुष्पिका । प्रोक्ता 'राजनिघंटे' तु पुरातनचिकित्सकैः ॥ ४७७ ॥ महाशणा घामनी च तथैव कटुतिक्तका । 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजांवरैः ॥ ४७८ ॥ घंटारवाल्पघंटीका घंटा शावरपुष्पिका । 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ४७९ ॥ 'द्रव्यरत्नाकरे' चैव त्वक्री प्रोक्ता मनीषिभिः । घावनी स्वल्पघंटा च पुष्पीका 'मदने' स्मृता॥४८०॥ घंटा तु रणघंटेति प्रोक्ता 'भावप्रकाशके' । एकविंशतिसंज्ञाका संप्रोक्ता भिषजां वरैः ॥ ४८१ ॥ गुणाः । शणपुष्पी रसे तिक्ता कषाया कफवातजित् । अजीर्णज्वरहंत्री च वमनी रक्तदोषनुत् ॥ ४८२ ॥ 'राजनामनिघंटे' च भिषग्भिः परिकीर्तिता । त्रिदोषघ्ना 'द्रव्यरत्ने' संप्रोक्ता भिषजां वरैः ॥ ४८३ ॥ मालवी कंठदोषघ्ना मुखरोगहरा 'धने' । कफपित्तहरा प्रोक्ता 'केयदेवनिघंटके' ॥ ४८४ ॥ २१ लघुशणपुष्पी । म०

* पाठान्तर—ज्वरोग्र नाशयेत् इति हेतोः द्विवचन वा ?

मालाबुंदुधिका । 'द्रव्यरत्नाकरे' प्रोक्ता वद्यविद्याविचक्षणैः ॥ ११६ ॥ हद्रोगवातगुल्मघ्नी मूत्रहा 'धन्वनामके' । रसे पाके तु तिक्ता च कृच्छ्रमेहविनाशिनी ॥ ११७ ॥ कफानिलहरा चैव वातरक्तहरा तथा । उदावर्तमवातघ्नी गरहा 'कैयदाके' ॥ ११८ ॥ मोहभ्रमत्रिदोषघ्नी प्रोक्ता 'मदनपालके' । वातोद्भवरुजघ्नी च रेचिनी 'भावनामके' ॥ ११९ ॥ २९ महानीली । म० मोठी नीळ । गु० मोटी गळी । महानील्या मला चैव तुल्या श्रीफलिका तथा । राजनीली तु मेचा च केशार्हा भृशपत्रिका ॥ १२० ॥ प्रोक्त 'राजनिघ' ते वभन०गा मिशद्-लने । गुणा । महानीली गुणाढ्य स्याद्गाश्रेड तु वीर्यदा ॥ १२१ ॥ पूर्वोक्तनीलिका देशा सगुणा सर्वकर्मसु । ३० गोजिव्हा । म० पाथरी । गु० भोपाथरी । गोजिव्हा खरपत्री च भवेन्नाडीदलिका तथा ॥ १२२॥ अधोमुखाऽदर्विपुष्पी च धेनुजिव्हा तथैव च । प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविशारदैः ॥ १२३ ॥ गोधुमी दार्विपत्री च दीर्घिका कष्टमूढिका । गोमा गाजी खरस्पर्शा भनिका गोजिव्हालिका ॥ १२४ ॥ 'वैद्यदेवे' भिषक्श्रेष्ठे समोक्ता नैव संशय । 'द्रव्यरत्ने' दार्तिरिति समोक्ता भिषगा वरे ॥ १२५ ॥ गोभी तु दीर्घिका चैव तथैव खरपर्णिनी । प्रोक्ता 'मदनपाले' तु भिषग्विद्याविशारदैः ॥ १२६ ॥ गुणा । गोजिव्हा कटुका शीता पित्तघ्नी व्रणरोपणी । सर्वदलविपाघ्नी प्रोक्ता 'राजनिघंटे' ॥ १२७ ॥ पाके स्वादु रसे हैमा वातघ्ना ग्राहिणी तथा । कफपित्तहरा हृद्या कासारुचिविनाशिनी ॥ ॥ १२८ ॥ श्वासप्रमेहरक्तघ्नी ज्वरहा 'कैयदेवके' । ३१ अपामार्ग । म० अघाडा । गु० अंघेडो । अपामार्गः शेखरी च निगिही खरमञ्जरी ॥ १२९ ॥ अथ शल्या दुर्ग्रहा च प्रत्यक्पुष्पी मयूरिका । वांदकठ शैखरिका मर्कटी दुरभिग्रहा ॥ १३० ॥ परापुष्पी च वशिरा कपी मर्कटपिप्पली । कण्टकरिका क्षारा क्षवक पंक्तिकण्टक ॥ १३१ ॥ मागारद कुकतरश्च प्रोक्ता 'राजनिघण्टे' । निगही दुर्ग्रहा चैव तथा कण्ट

पिप्पली ॥ ९३२ ॥ 'धन्वंतरिनिघंटे' च संप्रोक्ता भिषजां वरैः । क्षारमध्या मार्गदंता 'कैयदेवे' प्रकीर्तिता ॥ ९३३ ॥ क्षुद्रापामार्गश्चैव प्रोक्ता 'गणनिघंटके' । त्रिंशत्संख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥९३४॥ गुणाः । अपामार्गस्तु तीक्ष्णोष्णः कटुः कफविनाशकृत् । अर्शःकंडूदरामघ्नो ग्राही च विषहा तथा ॥ ९३५ ॥ रक्तहृद् वातिकृत् प्रोक्तो 'राजनामनिघंटके' । दीपनोथ सरश्चैव मेदानिलहरस्तथा ॥ ९३६ ॥ शूलसिध्मापचीकंडूदद्रुघ्नो 'कैयदेवके' । कफवातहरश्चैव 'गणे' प्रोक्तो भिषक्जनैः ॥ ९३७ ॥ ३२ रक्तापामार्गः । म० तांबडा अघाडा । गु० रातो अघेडो । रक्तापामार्गकश्चैव क्षुद्रापामार्ग एव च । आघट्टको दुग्धनिका रक्तबिल्लपत्रिका ॥ ९३८ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्विद्यापरायणैः । नतो रक्तफलश्चैव वसिरः कपिपिप्पली ॥ ९३९ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजां वरैः । रक्तो रक्तफला चैव बिंदुको यष्टिरस्तथा ॥ ९४० ॥ कुंटस्तु मर्कटी चैव प्रत्यक्श्रेणी खरच्छदः । 'कैयदेवनिघंटे' च प्रोक्ता पूर्वचिकित्सकैः ॥ ९४१ ॥ धामार्गवः केशपर्णी प्रत्यक्पर्णी तथैव च । प्रोक्ता 'भावप्रकाशे' च विंशत्संख्या भिषक्जनैः ॥ ९४२ ॥ गुणाः । रक्तापामार्गकः शीतः कटुः कफमरुत्मदः । व्रणकंडूविषघ्नश्च संग्राही वातिकृत् तथा ॥ ९४३ ॥ शीतस्वादु रसे पाके दुर्जरं वातजं तथा । रूक्षं च रक्तपित्तघ्नं विष्टंभी 'कैयदेवके' ॥ ९४४ ॥ 'द्रव्यरत्नाकरे' प्रोक्तं वातिकृत् श्वासहारकं । वातकृत् 'कैयदेवे' च सर्वे फलगुणाः स्मृताः ॥ ९४५ ॥ ३३ **बला** । म० चिकणा, लघु चिकणा । गु० बला । ओदनिका बला भद्रा समंगा तदनंतरम् । भद्रोदनी च कल्याणी तथैव वरकाष्ठिका ॥ ९४६ ॥ मोटा भद्रफला चैव बलाढ्या वाटिका तथा । प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविशारदैः ॥ ९४७ ॥ प्रोक्ता 'मदनपाले' तु सनासा वरवाहिनी । वाटी महासमंगा च तथैव खरयष्टिका ॥ ९४८ ॥ ओदनाव्हा शीतपाकी प्रोक्ता 'धन्वंतरौ' ध्रुवं । वाट्यालका तु वाटी च निरपुष्पी

तदुत्तरं ॥ ९४९ ॥ वाट्या पीतचटा चैव 'कैयदेवे' प्रकीर्तिता। ऋष्यगा समा शीतवरा प्रतापीरिष्यका तथा ॥ ९५० ॥ प्रोक्ता 'गणनिघंटे' तु सप्तविंशतिसंख्यका। गुणाः। बला तिक्ता च मधुरा तथा पित्तातिसारजित् ॥ ९५१ ॥ बलवीर्यपुष्टिदात्री तद्वत् कफविशोधिनी। प्रोक्ता 'राजनिघंटे' च पुरातनभिषग्वरैः ॥ ९५२ ॥ तन्मूलं च त्वचा क्षीरं शर्करामूत्रकृच्छ्रजित्। स्निग्धा हिमा स्वादु वृष्या त्रिदोषशामनी तथा ॥ ९५३ ॥ रक्तपित्तक्षतघ्नीति प्रोक्ता 'धन्वंतरौ' ध्रुवं। रसे पाके च मधुरा वातशोणितहा 'गणे' ॥ ९५४ ॥ ३४ बलोत्तरा। म० थोरला चिकणा। गु० खरेटी। बला महासमंगा च ओदनी च वृक्षारुहा। ततो वृद्धिगन्धा चैव तथैव क्षतनंडुला ॥ ९५५ ॥ भुजंगजिव्हा शीता च तथैव शीतपाकिनी। बलाव्हया शीतवरा बल्याक्षीरिहिटी तथा ॥ ९५६ ॥ बलोत्तरा व्यालजिव्हा पंचभू 'राजनामके'। गुणाः। महासमंगा मधुरा त्वम्ला चैव त्रिदोषहा ॥ ९५७ ॥ ज्वरदाहहरा प्रोक्ता वैद्यै 'राजनिघंटके'। ३५ महाबला। म० सहदेवी। गु० सहदेवी। महाबला ज्येष्ठबला तथैव तु ऋतंभरा ॥ ९५८ ॥ केसरिका केशारुहा वर्षपुष्पा मृगादनी। प्रसारणी देवबला तथैव केशवर्धिनी ॥ ९५९ ॥ सारिणी सहदेवी च पीतपुष्पी तदुत्तरम्। देवाव्हा गंधवल्ली च मृगा मृगरसा तथा ॥ ९६० ॥ प्रोक्ता 'राजनिघंटे' तु भिषग्विद्याविशारदैः। बृहत्फला देवसहा तथैव तु बृहद्बला ॥ ९६१ ॥ वाट्यायनीति संप्रोक्ता भिषग्भि 'राजनामके'। वीरपुष्पी तु वाट्या च वाट्याली तु बृहत्फला ॥ ९६२ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशय। तथा 'मदनपाले' तु वीरपुष्पा प्रकीर्तिता ॥ ९६३ ॥ महर्षी विपुला धन्या मांगल्यार्हा प्रसादनी। महागंधा देवदंडा तथैवोत्पलसंज्ञका ॥ ९६४ ॥ प्रोक्ता 'गणनिघंटे' तु पंचत्रिंशत् भिषक्जनैः। गुणाः। महाबला तु हृद्रोगशोफवातार्शहा तथा ॥ ९६५ ॥ शुक्रवृद्धिकरी बल्या विषमज्वरहा 'नृपे'। ३६ अतिबला। म०

शीतदा प्रातरेव, शाणपर्णीति 'केयदे' ॥ ६५२ ॥ 'द्रव्यरत्नाकरे' चैव मयती परिकीर्तिता । वन्हिभूमरूपक्षा प्रोक्ता वैद्यविद्याविशारदे ॥ ॥ ६५३ ॥ गुणा । जयती तु प्रतिक्ता कटूष्णा वातनाशिनी । शूलापहा कटरोधी, सा तृष्णा च रसायनी ॥ ६५४ ॥ प्रोक्ता 'राजनिघंटे' तु 'धन्वे' विषत्रिदोषहा ॥ 'केमे' पित्तकृच्छ्री च मूत्रकृच्छ्रहरा तथा ॥ ६५५ ॥ जय विवादे कुरुते प्रोक्ता वैद्यैर्न संशयः । 'द्रव्ये' हिमा कफघ्नीति भिषग्भिः परिकीर्तिता ॥ ६५१ ॥ ४८ काकमाचिका । म० कागोणी । गु० पीलुडी, वागुणी । काकमाची ध्वांक्षमाची वायसाव्हा च वायसी । सर्वतिक्ता बहुफला कटुफला च रसायनी ॥ ६५२ ॥ काकमाता गुच्छफला स्वादुपाका तु सुंदरी ॥ वरा विद्राविणी चैव मत्स्याक्षी कुष्ठनाशिनी ॥ ६५३ ॥ तिक्ता च बहुतिक्तेति प्रोक्ता राजनिघंटके । काकाव्हा चैव कट्वी तु रसायनवरा तथा ॥ ॥ ६५४ ॥ 'धन्वन्तरिनिघंटे' तु समोक्ता भिषग्वरै । काकमाची तु काकमाता ध्वांक्षी च काकिनी तथा ॥ ६५५ ॥ माची गुच्छफला चैव 'केये' प्रोक्ता भिषग्वरै । तुडको कामना चैव प्रोक्ता 'गुणनिघंटके' ॥ ॥ ६५७ ॥ गुणा । काकमाची कटुस्तिक्ता रसोष्णा कफशूलहृत् । शोफार्श कुष्ठकृत्‍ नाशिनी 'राजनामके' ॥ ६५७ ॥ हिक्काछर्दिविनाशा च 'भावे' नेत्रहिता स्मृता । रसायनी निद्रापघ्नी प्रोक्ता 'धन्वंतरे' ध्रुव ॥ ६५८ ॥ हृद्या वृष्या च स्वर्येति प्रमेहश्वासकासहा । ज्वरारुचिहरा प्रोक्ता 'कैयदेवनिघंटके' ॥ ६५९ ॥ स्निग्धा शुक्रमदा प्रोक्ता 'मदने' परिकीर्तिता । ४९ मूषकमारी । म० उंदिरमारी । गु० उंदरामारी । मूतश्रेणी द्रवंती च न्यग्रोधी मूषिकाव्हया ॥ ६६० ॥ चित्रा, मूषकमारी च प्रत्यकूश्रेणी च चक्षुषा । वृटूरावृविषघ्नीति प्रोक्ता 'राजनिघंटके' ॥ ६६१ ॥ दशसख्येति समोक्ता वैद्यविद्याविशारदैः । गुणाः । मूतश्रेणी 'नृपे' प्रोक्ता कट्वराखुविषापहा ॥ ६६२ ॥ चक्षुष्या व्रणदोषघ्नी नेत्रामयनिकृन्तनी । ५० विजया । म० भाग । गु० भाग ।

तामछोमशा । प्रोक्ता ' राजनिघटे ' तु भिषक्शास्त्रविशारदैः ॥ १७९ ॥
'धन्वतरिनिघटे' च प्राचीमला सुलोमशा ।।मदध्या कर्षणी ??काका?का-
फलिका नदीपका ॥ १८० ॥ प्राचीचलतसारिस्व्याता तथा मधुरभूषणा।
' केयदेवे ' भिषक्श्रेष्ठे नदीकान्ता तु ' द्रव्यके ' ॥१८१ ॥ तत प्राप्ति
बला चैव परा तु सारिका तथा । राजनीति भिषक्श्रेष्ठे प्रोक्ता 'गणनिर्वन्के
॥१८२॥ प्रयोविंशतिसख्याका समोक्ता भिषगावरैः । गुणाः । काकजघा
तु तिक्तोष्णा कृमिव्रणकफापहा ॥ १८३॥ बाधीर्यार्शी गनाशा च विषम
ज्वरहा 'नृपे' । हिमा कषाया संप्रोक्ता कफपित्तविनाशिनी ॥ १८४ ॥
रक्तकुष्ठहरा कडूविषहा,' केयदेवके ' । रक्तपित्तं हिम इति प्रोक्ता 'द्रव्ये',
भिषक्वरैः ॥ १८५ ॥ ९९ चचू । म० चुच । गु० छुउ । चचू तु विजलु
चषु कलम्री श्रीरुपत्रिका। चुचुरश्चुचुपत्रश्च सुशाक क्षेत्रसभव ॥ १८६ ॥
प्रोक्ता ' राजनिघटे ' तु भिषक्शास्त्रविशारदैः । कटीरश्च कटीरश्च बृहद्
घोटी च छोणिका ॥ १८७ ॥ कुटिमर कुटीरश्च तथैव तु चुचुरक ।
'केयदेवे ' भिषक्श्रेष्ठे कथितो नैव सशय ॥ १८८ ॥ चञ्चुर्दग्धी चञ्चुप
क्षाल्यो विच्छलच्छल एव च । ' द्रव्यरत्नाकरे ' नैव नवमू परिकीर्तिता
॥ १८९ ॥ गुणाः । चञ्चु तु मधुरा तीक्ष्णा कषाया मलरोधिणी । गुल्मोदर-
विबधार्शोग्रहणापहारिणी ' नृपे ' ॥ १९० ॥ सर शीता वन्हिकृच्च
वातहा ' द्रव्यनामके ' । दोषत्रयविनाशा च धातुपुष्टिकरा मता ॥ १९१ ॥
मेध्या ' भावप्रकाशे ' च प्रोक्ता वैद्यैर्न सशय । मूत्रकृच्छ्रहरा वातीवात-
हेति ' नृपे ' स्मृता ॥ १९२ ॥ ९६ बृहच्चचु । म थोर चुच । गु मोटी
छुउ ।बृहच्चचु विषारिश्च महाचचु सुचुचुका। स्थूलचुञ्चुर्दीर्घपत्री दिव्यगधा
॥ ' राजनि ' ॥ १९३ ॥ समसख्यैर्ते प्रोक्तैषा भिषक्शास्त्रविशारदैः ।
गुणाः । बृहच्चचु कटूष्णा च कषाया मलरोधिनी ॥ १९४ ॥ गुल्मशू
लोदरार्शोघ्नी विषहा च ' रसायनी ' । तद्बीज तु कटूष्णं च गुल्मशूलविषाप-

हं ॥ ६९५ ॥ त्वग्दोषकंडुकुष्ठघ्नं प्रोक्तं 'राजनिघंटके' । ५७ क्षुद्रचंचु । म० लहान चुंच । गु० नहानी छुछ । क्षुद्रचंचुस्तु चंचुः स्याच्चंचुः शुनकचुंचुका ॥ ६९६ ॥ त्वक्सारभेदिनी क्षुद्रा कटुका परपत्रिका । गुणाः । क्षुद्रचंचुस्तु मधुरा कटूष्णा च कषायिका ॥ ६९७ ॥ दीपनी शूलगुल्मार्शशमनी च विबंधकृत् । प्रोक्ता 'राजनिघंटे' च पुरातनचिकित्सकैः ॥ ६९८ ॥ ५८ सिंदुवार । म० श्वेत निर्गुडी । गु० धोळी नगोड । सिंदुवारः श्वेतपुष्पः सिंदूकः सिंदुवारकः । स्थिरसाधनकश्चैव त्वनंतः सिद्धकस्तथा ॥ ६९९ ॥ अर्थसिद्धकसंज्ञेति प्रोक्ता 'राजनिघंटके' । श्वेतको नीलपुष्पश्च तद्वत् शीतसरस्तथा ॥ ७०० ॥ निर्गुडी सितासिंदूका प्रोक्ता 'धन्वंतरौ' ध्रुवं । वनकेंद्रा भूतकेशी भूतावेश्या तु सुस्थिरा ॥ ७०१ ॥ 'कैयदेवनिघंटे' तु प्रोक्ता सप्तदशेति च । गुणाः । सिंदुवारा कटुस्तिक्ता कफवातक्षयापहा ॥ ७०२ ॥ कुष्ठकंडूशूलहरा प्रोक्ता 'राजनिघंटके' । कृमिकुष्ठारुचिहरा गुल्मारुचिहरा 'धने' ॥ ॥ ७०३ ॥ चक्षुष्या दीपनी मेध्या केश्यारोचकहारिणी । मेदामशूलव्रणहा प्रतिश्यायहरा तथा ॥ ७०४ ॥ शोफहा श्वासकासघ्नी तत्पुष्पं विषपित्तनुत् । 'कैयदेवनिघंटे' च संप्रोक्ता भिषजां वरैः ॥ ७०५ ॥ स्मृतिमदामवातघ्नी 'द्रव्ये' प्रोक्ता भिषक्वरैः । धूपलेपात्विषघ्नश्च रक्तगुल्महरा तथा ॥ ७०६ ॥ उदावर्तहरा प्रोक्ता 'गणनामनिघंटके' । ५९ नीलसिंदुक । म० निळी निर्गुडी । गु० नीळी नगोड । शीतसहा तु निर्गुंडी तथैव नीलसिंदुकः ॥ ७०७ ॥ सिंदू कच्छपिका भूतकेशींद्राणी च नीलिका । प्रोक्ता 'राजानिघंटे' तु भिषक्विद्यापरायणैः ॥ ७०८ ॥ गिरिसिंदुकसंज्ञश्च नीलसिंदुः सहा तथा । इंद्राणी 'कैयदेवे' तु संप्रोक्ता भिषजांवरैः ॥ ७०९ ॥ दशसंख्येति प्रोक्तैषा वैद्यविद्याविचक्षणैः । गुणाः । नीलसिंदुः कटुस्तिक्त रूक्षो कासहरस्तथा ॥ ७१० ॥ श्लेष्मशोफानिलहरो प्रदराध्मानहा 'नृपे' । ६० शेफालिका । म० राननिर्गुडी । गु० वननगोड । शेफालिका तु सुवहा शुक्लांगी शीतमंजरी ॥ ७११ ॥ अपराजिता [illegible] विजया वातरी भूतकेशि च । प्रोक्ता 'राजनिघंटे' तु

